**Roll No.** | | | | | | | | |

(Write Roll Number from left side exactly as in the Admin Card)

*Signature of Invigilator*

**Question Booklet Series** **X**

**PAPER–II** **Question Booklet No.**

(Identical with OMR Answer Sheet Number)

**Subject Code : 03**

# SANSKRIT

*Time : 2 Hours* *Maximum Marks: 200*

***Instructions for the Candidates***

1. Write your Roll Number in the space provided on the top of this page as well as on the OMR Sheet provided.
2. At the commencement of the examination, the question booklet will be given to you. In the first 5 (five) minutes, you are requested to open the booklet and verify it:
   (i) To have access to the Question Booklet, tear off the paper seal on the edge of this cover page.
   (ii) Faulty booklet, if detected, should be got replaced immediately by a correct booklet from the invigilator within the period of 5 minutes. Afterwards, neither the Question Booklet will be replaced nor any extra time will be given.
   (iii) Verify whether the Question Booklet No. is identical with OMR Answer Sheet No.; if not, the full set is to be replaced.
   (iv) After this verification is over, the Question Booklet Series and Question Booklet Number should be entered on the OMR Sheet.
3. This paper consists of One Hundred (100) multiple-choice type questions. All the questions are compulsory. Each question carries *two* marks.
4. Each Question has four alternative responses marked: (A) (B) (C) (D). You have to darken the circle as indicated below on the correct response against each question.
   *Example:* (A) (B) ● (D), where (C) is the correct response.
5. Your responses to the questions are to be indicated correctly in the OMR Sheet. If you mark your response at any place other than in the circle in the OMR Sheet, it will not be evaluated.
6. Rough work is to be done at the end of this booklet.
7. If you write your Name, Phone Number or put any mark on any part of the OMR Sheet, except in the space allotted for the relevant entries, which may disclose your identity or use abusive language or employ any other unfair means, such as change of response by scratching or using white fluid, you will render yourself liable to disqualification.
8. Do not tamper or fold the OMR Sheet in any way. If you do so, your OMR Sheet will not be evaluated.
9. You have to return the Original OMR Sheet to the invigilator at the end of the examination compulsorily and must not carry it with you outside the Examination Hall. You are, however, allowed to carry question booklet and duplicate copy of OMR Sheet after completion of examination.
10. **Use only Black Ball point pen.**
11. **Use of any calculator, mobile phone, electronic devices/gadgets etc. is strictly prohibited.**
12. **There is no negative marks for incorrect answer.**

***परीक्षार्थिनां कृते निर्देशावली***

1. एतत्पत्रोपरि समं च प्रदत्ते OMR-पत्रमध्ये निर्दिष्टस्थले भवत:/भवत्या क्रमसंख्या लेख्या।
2. परीक्षारम्भे प्रश्नपुस्तिका भवते/भवत्यै प्रदास्यते। प्रथमनिमेषपञ्चके पुस्तिकामुद्घाटयितुं तथा एतस्य याथार्थ्यं परीक्षितुं भवान्/भवती अनुरुध्यते।
   (a) प्रश्नपुस्तिकाभ्यन्तरं द्रष्टुम् एतत्प्रच्छदपत्रस्य प्रान्तभागोपरिस्थिता पत्रमुद्रा छेदनीया।
   (b) त्रुटियुक्ता पुस्तिका दृष्टा चेत् परीक्षानिरीक्षकात् प्राप्तया शुद्धपुस्तिकया अविलम्बेन पञ्चनिमेषमध्ये सा प्रतिस्थापनीया। तत: परं प्रश्नपुस्तिकाप्रतिस्थापनं न भवेत्, नापि च अतिरिक्त: समय: प्रदास्यते।
   (c) प्रश्नपुस्तिकासंख्या OMR-उत्तरपत्रसंख्यानुरूपा न वेति परीक्षणीयम्। न चेत् सम्पूर्ण: गुच्छ: प्रतिस्थापनीय:।
   (d) यथार्थतापरीक्षावसाने प्रश्नपुस्तिकाश्रेणीसंख्या तथा प्रश्नपुस्तिकासंख्या OMR-पत्रमध्ये निवेशनीया।
3. पत्रमिदं शतसंख्यकबहुचयनीयविकल्पोत्तरकप्रश्नसमन्वितम्। सर्वे प्रश्ना: अवश्यमुत्तरणीया:। प्रत्येकं प्रश्न: अङ्कद्वयमानक:।
4. प्रत्येकं प्रश्नस्य चत्वार: उत्तरविकल्पा: सन्ति। ते हि (A) (B) (C) (D) इत्येवं चिह्निता:। प्रत्येकं प्रश्नस्य कृते शुद्धोत्तरसमन्वितं वृत्तम् अधोदर्शितरीत्या कृष्णीकर्तव्यम्। उदाहरणम्: (A) (B) ● (D), यत्र (C) इति शुद्धोत्तरम्।
5. प्रतिप्रश्नं भवदुत्तरं यथायथतया OMR-पत्रमध्ये निर्देष्टव्यम्। OMR-पत्रमध्ये निर्दिष्टवृत्तमतिरिच्य अन्यत्र कुत्रापि भवदुत्तरं निधीयते चेत् तत् परीक्षार्थं विवेचितं न स्यात्।
6. आवश्यकत्वे सति उत्तरस्य स्थूलरूपनिर्माणानुकूलं कार्यं पुस्तिकाया: अन्तिमभागे विधातव्यम्।
7. प्रासङ्गिकतथ्योल्लेखाय निर्दिष्टं स्थानं विहाय OMR-पत्रमध्ये अन्यत्र कुत्रापि भवत:/भवत्या: नाम दूरभाषसंख्या अन्यत् वा किमपि भवत्परिचयप्रकाशकं चिह्नं भवता/भवत्या निधीयते चेत्, निन्दनीया भाषा वा प्रयुज्यते चेत्, नखघर्षणेन श्वेतद्रवेण वा उत्तरपरिवर्तनम् इत्येवंरूप: कोऽप्यन्य: असदुपाय: वा उपयुज्यते चेत् भवान्/भवती स्वयमेव स्वायोग्यतां सूचयिष्यति।
8. OMR-पत्रं न कथमपि विकर्तव्यं नापि वा भङ्ग्या पुटीकर्तव्यम्। एवं क्रियते चेत् भवत:/भवत्या: OMR-पत्रं न परीक्षिष्यते।
9. परीक्षावसाने भवता/भवत्या अवश्यमेव भवदीयं प्रकृतं OMR-पत्रं परीक्षानिरीक्षकाय प्रत्यर्पणीयम्। परीक्षाप्रकोष्ठात् बहिस्तु तद् आत्मना सह नैव नेतव्यम्। परं परीक्षासमाप्तेरनन्तरं प्रश्नपुस्तिकां तथा OMR-पत्रस्य प्रतिलिपिं नेतुमनुमतिरस्ति।
10. **केवलं वर्तुलाग्रा कृष्णमसि: लेखनी उपयोक्तव्या।**
11. **गणकयन्त्रम्, दूरभाषयन्त्रम्, यत् किमपि वैद्युतिकयन्त्रम् इत्यादे: उपयोग: कठोरतया प्रतिषिद्ध:।**
12. **असदुत्तरहेतो: अङ्कवियोजननीतिर्नास्ति।**

**PAPER II**

**(SANSKRIT)**

**1.** यजुर्वेदस्य श्रौतसूत्रमस्ति —
(A) कौषीतकिश्रौतसूत्रम्
(B) वैतानश्रौतसूत्रम्
(C) खादिरश्रौतसूत्रम्
(D) वाधूलश्रौतसूत्रम्

**2.** 'छन्दस्' शब्दस्य यास्कसम्मत-निर्वचनमस्ति
(A) छन्दसि बहुलम्
(B) छन्दांसि छादनात्
(C) छन्द: आह्लादने
(D) नास्त्येव

**3.** माण्डव्यशिक्षा कुत्र प्राप्यते?
(A) ऋग्वेदे
(B) यजुर्वेदे
(C) सामवेदे
(D) अथर्ववेदे

**4.** केन वेदेन सम्बद्धा माण्डूकीशिक्षा?
(A) ऋग्वेदेन
(B) यजुर्वेदेन
(C) सामवेदेन
(D) अथर्ववेदेन

**5.** 'ज्योतिषामयनं चक्षु:' कुत्र प्राप्यते?
(A) माण्डूकीशिक्षायाम्
(B) माण्डव्यशिक्षायाम्
(C) वाधूलशिक्षायाम्
(D) पाणिनीयशिक्षायाम्

**6.** उत्कृति-च्छन्दसि कियन्ति अक्षराणि सन्ति?
(A) 92
(B) 104
(C) 88
(D) 101

**7.** पुरुरव-उर्वशीसंवाद: प्राप्यते —
(A) ऋग्वेदस्य दशममण्डले
(B) ऋग्वेदस्य नवममण्डले
(C) ऋग्वेदस्य अष्टममण्डले
(D) ऋग्वेदस्य सप्तममण्डले

**8.** 'रसो वै स:, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति मन्त्र: कस्यामुपनिषद्यस्ति?
(A) बृहदारण्यकोपनिषदि
(B) माण्डुक्योपनिषदि
(C) मुण्डकोपनिषदि
(D) तैत्तिरीयोपनिषदि

**9.** ऐतरेयब्राह्मणं कस्य वेदस्यास्ति?
(A) ऋग्वेदस्य
(B) सामवेदस्य
(C) अथर्ववेदस्य
(D) यजुर्वेदस्य

**10.** 'पञ्चविंश' नामकं ब्राह्मणं किमस्ति?
(A) शाङ्खायनम्
(B) ऐतरेयम्
(C) ताण्डयम्
(D) माण्डुकायनम्

**11.** बृहदारण्यकोपनिषत् कस्मिन् ब्राह्मणेऽस्ति?

(A) ताण्ड्यब्राह्मणे

(B) ऐतरेयब्राह्मणे

(C) शतपथब्राह्मणे

(D) छान्दोग्यब्राह्मणे

**12.** उमाहैमवत्याख्यानं कस्यामुपनिषदि निर्दिष्टम्?

(A) केनोपनिषदि

(B) कठोपनिषदि

(C) तैत्तिरीयोपनिषदि

(D) ईशोपनिषदि

**13.** कठोपनिषदि नचिकेतसा किं प्रार्थितम्?

(A) स्त्रीरत्नम्

(B) हिरण्यादिकम्

(C) जागतिकसुखम्

(D) आत्मविद्या

**14.** याज्ञवल्क्यः कया उपनिषदा सम्बद्धः?

(A) ईशोपनिषदा

(B) बृहदारण्यकोपनिषदा

(C) कठोपनिषदा

(D) तैत्तिरीयोपनिषदा

**15.** आत्मना विन्दते वीर्यम् ... - अयं विचारः कुत्र दृश्यते?

(A) केनोपनिषदि

(B) कठोपनिषदि

(C) ईशोपनिषदि

(D) छान्दोग्योपनिषदि

**16.** ऋग्वैदिक-शाकलसंहितायाः पदपाठः केन कृतः?

(A) वेदव्यासेन

(B) यास्काचार्येण

(C) शाकलेन

(D) वैशम्पायनेन

**17.** विश्वामित्र-नदी-संवादसूक्ते प्राथमिकेषु मन्त्रेषु समुल्लिखिते नद्यौ —

(A) विपाट् शुतुद्री च

(B) गङ्गा यमुना च

(C) नर्मदा गोदावरी च

(D) गङ्गा कावेरी च

**18.** शतक्रतुविशेषणेन विशिष्टः कः?

(A) रुद्रः

(B) अग्निः

(C) इन्द्रः

(D) वृहस्पतिः

**19.** 'अग्ने सूपायनो भव' — इत्यत्र 'सूपायन' इत्यत्र कः समासः?

(A) कर्मधारयः

(B) बहुव्रीहिः

(C) प्रादितत्पुरुषः

(D) द्वन्द्वः

**20.** सन्ध्यावन्दनादीनि

(A) नैमित्तिकानि

(B) प्रायश्चित्तानि

(C) नित्यानि

(D) उपासनानि

**21.** पुद्गलः इति शब्दः कस्मिन् दर्शने वर्त्तते?
(A) सांख्यदर्शने
(B) वेदान्तदर्शने
(C) बौद्धदर्शने
(D) जैनदर्शने

**22.** महासांघिकसम्प्रदायः कस्य दार्शनिकसम्प्रदायस्य अन्तर्गतः?
(A) वेदान्तसम्प्रदायस्य
(B) बौद्धसम्प्रदायस्य
(C) योगसम्प्रदायस्य
(D) न कस्यापि

**23.** ब्रह्मसूत्राणां भगवत्पादशङ्कराचार्यकृतस्य भाष्यस्य केन नाम्ना व्यवहारः?
(A) श्रीभाष्यम्
(B) शारीरकभाष्यम्
(C) व्यासभाष्यम्
(D) अणुभाष्यम्

**24.** 'दृष्टवदानुश्रविकः' इत्यत्र 'आनुश्रविकः' इत्यस्य पदस्य कोऽर्थः?
(A) वेदाङ्गम्
(B) पुराणम्
(C) स्मृतिः
(D) श्रुतिः

**25.** सांख्यसम्मतः सिद्धान्तः कः?
(A) आरम्भवादः
(B) स्वभाववादः
(C) विवर्त्तवादः
(D) परिणामवादः

**26.** अज्ञानोपहितचैतन्यं कीदृशं कारणं भवति?
(A) उपादानकारणम्
(B) निमित्तकारणम्
(C) उपादानकारणं निमित्तकारणं च
(D) न कीदृशमपि कारणम्

**27.** अज्ञानादिसकलजडसमूहः इति उच्यते
(A) अवस्तु
(B) समष्टिः
(C) वस्तु
(D) व्यष्टिः

**28.** वेदान्तसारानुसारं प्रयोजनम्
(A) दुःखनिवृत्तिः
(B) ज्ञानप्राप्तिः
(C) अभ्युदयप्राप्तिः
(D) अज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च

**29.** वेदान्तो नाम किम् अस्ति?
(A) धर्मशास्त्रप्रमाणम्
(B) अर्थशास्त्रप्रमाणम्
(C) उपनिषत्प्रमाणम्
(D) शब्दशास्त्रप्रमाणम्

**30.** प्रमाणवार्त्तिकं केन रचितम्?
(A) दिङ्नागेन
(B) धर्मकीर्तिना
(C) असङ्गेन
(D) नागार्जुनेन

**31.** शून्यवादं कः समर्थयति?

(A) योगाचारः

(B) वैभाषिकः

(C) माध्यमिकः

(D) सौत्रान्तिकः

**32.** विज्ञानवादः कैरङ्गीक्रियते?

(A) सौत्रान्तिकैः

(B) योगाचारैः

(C) वैभाषिकैः

(D) माध्यमिकैः

**33.** वेदान्तमते जीवः कीदृशः?

(A) नित्यः

(B) अनित्यः

(C) नित्यानित्यः

(D) जडः

**34.** एकस्मिन् त्र्यणुके कति परमाणवः सन्ति?

(A) पञ्च

(B) षट्

(C) सप्त

(D) अष्टो

**35.** अद्वैतवेदान्तस्वीकृता ख्यातिः किंविधा?

(A) अन्यथाख्यातिः

(B) अनिर्वचनीयख्यातिः

(C) असत्ख्यातिः

(D) अख्यातिः

**36.** तद्वति तत्प्रकारकोऽनुभवो यथार्थः। यथार्थानुभवश्च प्रमेत्युच्यते। इयं प्रमा समवायेन कुत्र वर्तते?

(A) तद्वति

(B) तत्प्रकारे

(C) तत्प्रकारकानुभवे

(D) तत्प्रकारकानुभववति

**37.** न्यायसिद्धान्तमुक्तावल्यनुसारं पक्षता कीदृशः पदार्थः?

(A) द्रव्यम्

(B) गुणः

(C) समवायः

(D) अभावः

**38.** ''असदकरणात्... सत्कार्यम्''इत्यत्र प्रतिपाद्यानुमानस्याकारः कीदृशः?

(A) कार्यम् असद् अकरणात्

(B) कार्यं सत् करणात्

(C) कार्यं सद् असदकरणात्

(D) कार्यम् असत् करणात्

**39.** ''कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायि कारणम्'' इत्यत्र 'कारणेन' इत्युक्ते कीदृशकारणेनेति बोध्यते?

(A) कार्यस्य कारणेन

(B) स्वस्य कारणेन

(C) कार्यस्य स्वस्य च कारणेन

(D) स्वकार्येतरकार्यकारणेन

**40.** 'सोमेन यजेत' इत्यत्र आर्थी भावना कुत्र वर्तते?

(A) शब्दे

(B) प्रवर्तकपुरुषे

(C) प्रवृत्तौ

(D) प्रवर्तनीयपुरुषे

**41.** 'माणवकं धर्मं ब्रूते' इत्यत्र माणवकम् इति प्रयोगः केन सूत्रेण?

(A) कर्तुरीप्सिततमं कर्म

(B) अकथितं च

(C) अधिशीङ्स्थासां कर्म

(D) अधीगर्थदयेशां कर्मणि

**42.** समुद्रगुप्तस्य प्रयागप्रशस्तेः रचयिता कः?

(A) वासूलः

(B) वत्सभट्टिः

(C) हिरषेणः

(D) वीरसेनः

**43.** गोपी कृष्णाय तिष्ठते — अत्र आत्मनेपदं कस्मिन् अर्थे?

(A) प्रकाशनार्थे

(B) गत्यर्थे

(C) देवपूजनार्थे

(D) स्मरणार्थे

**44.** 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रस्योदाहरणं किम्?

(A) सम्राट्

(B) किंह्नुते

(C) वाग्धरिः

(D) शान्तः

**45.** 'हर इह' इति सन्धिः केन सूत्रेण?

(A) लोपः शाकल्यस्य

(B) एङः पदान्तादति

(C) एङि पररूपम्

(D) अदसो मात्

**46.** श्रीः इत्यत्र कस्मिन्नर्थे प्रथमा विधीयते?

(A) प्रातिपदिकार्थमात्रे

(B) परिमाणमात्रे

(C) लिङ्गमात्रे

(D) वचनमात्रे

**47.** 'सीमा' इत्यत्र ङीष् – निषेधकं सूत्रं किमस्ति?

(A) अनो बहुव्रीहेः

(B) मनः

(C) टावृचि

(D) न यासमोः

**48.** उत्तपते, वितपते इत्यनयोः क्रियापदयोः कोऽर्थः?

(A) विलापयतीत्यर्थः

(B) सन्तापयतीत्यर्थः

(C) उष्णं करोतीत्यर्थः

(D) दीप्यते इत्यर्थः

**49.** 'एध्' धातोः आशीर्लिङि उत्तमपुरुषैकवचने रूपम्

(A) एधिषीय

(B) एधेय

(C) ऐधिषि

(D) एधिताहे

**50.** 'पुष्पाणि स्पृहयति' अत्र पुष्पाणि पदमस्ति

(A) ईप्सितम्

(B) ईप्सिततमम्

(C) अनीप्सितम्

(D) अनीप्सिततमम्

**51.** भाषागत-वाक्यरचना भवति
(A) परिष्कृता
(B) अपरिष्कृता
(C) अशुद्धरूपात्मिका
(D) अनिर्वचनीया

**52.** प्राचीनप्राकृतभाषा __________ अस्ति।
(A) प्राचीन-भारतीय-आर्यभाषा
(B) मध्य-भारतीय-आर्यभाषा
(C) पूर्वभारतीय-आर्यभाषा
(D) आधुनिक-भारतीय-आर्यभाषा

**53.** पुनरावृत्तेः उदाहरणमस्ति
(A) हरिहरः
(B) विन्ध्याचलपर्वतः
(C) आहार-विहारः
(D) केशाकेशि

**54.** 'एध वृद्धौ' इति एध्-धातोः 'ऐधत' इति रूपं निष्पद्यते
(A) लुङ्लकारे
(B) लङ्लकारे
(C) विधिलिङ्लकारे
(D) आशीर्लिङ्लकारे

**55.** 'चतुष्टयी शब्दानां प्रवृत्तिः' — इत्युकितः कुत्र प्राप्यते?
(A) पाणिनीय-शिक्षायाम्
(B) निरुक्ते
(C) महाभाष्ये
(D) वाक्यपदीये

**56.** 'व्यूढोरस्कः' इत्यत्र कीदृशः समासः?
(A) अव्ययीभावः
(B) तत्पुरुषः
(C) बहुव्रीहिः
(D) द्वन्द्वः

**57.** 'शिष्य' — इत्यत्र कः प्रत्ययः?
(A) ण्यत्
(B) यत्
(C) क्यप्
(D) ल्यप्

**58.** 'प्रथमानिर्दिष्टं समास उपसर्जनम्' — अत्र समासपदोत्तरं का विभक्तिर्वर्तते?
(A) प्रथमा
(B) सप्तमी
(C) सम्बोधने प्रथमा
(D) द्वितीया

**59.** 'गोहितम्' इत्यत्र शुद्धं विग्रहवाक्यमस्ति?
(A) गां हितम्
(B) गवे हितम्
(C) गाम् अहितम्
(D) गवा हितेन

**60.** 'द्वित्राः' इति शब्दे कः समासः?
(A) द्विगुः
(B) द्वन्द्वः
(C) बहुव्रीहिः
(D) कर्मधारयः

**61.** 'षष्ठी चानादरे' इत्यनेन या षष्ठी विधीयते सा

(A) केवलमनादरलक्षणा

(B) केवलं भावलक्षणा

(C) भावलक्षणा अनादरबोधिका च

(D) भावलक्षणा न

**62.** 'अपपरिवहिरञ्चवः पञ्चम्या' इत्यस्य वाच्यपरिवर्तने (प्रयोगपरिवर्तने) किं रूपं स्यात्?

(A) अपपरिवहिरञ्चुभिः पञ्चम्या

(B) अपपरिवहिरञ्चवेन पञ्चम्या

(C) अपपरिवहिरञ्चून् पञ्चमी

(D) अपपरिवहिरञ्चवं पञ्चमी

**63.** 'अनुर्लक्षणे' अत्र 'अनु' प्रातिपदिकस्य कोऽर्थः?

(A) लक्षणम्

(B) योग्यम्

(C) समीपम्

(D) अकाराद्यानुपूर्वीघटितः शब्दः

**64.** 'एत्येधत्यूठ्सु' इत्यत्र 'एति' इति किम्?

(A) धातुः

(B) प्रातिपदिकम्

(C) सुबन्तम्

(D) तिङन्तम्

**65.** "सुप् प्रतिना मात्रार्थे" इत्यत्र 'प्रतिना' इत्यत्र केन सूत्रेण तृतीया?

(A) सहयुक्तेऽप्रधाने

(B) कर्तृकरणयोस्तृतीया

(C) हेतौ

(D) अपवर्गे तृतीया

**66.** 'येनाङ्गविकारः' इत्यत्र अङ्गशब्दस्यार्थः कः?

(A) अवयवः

(B) अवयवी

(C) शरीरी

(D) शरीरधर्मः

**67.** 'हस्तापचेयं यशः' इत्यत्र का वक्रता?

(A) उपचारवक्रता

(B) वर्णवक्रता

(C) पर्यायवक्रता

(D) वाक्यवक्रता

**68.** 'चतुर्विंशति सहस्री' इति नामान्तरं कस्य?

(A) रामायणस्य

(B) भागवतपुराणस्य

(C) महाभारतस्य

(D) नाट्यशास्त्रस्य

**69.** शैला इवोन्नता सन्तः किन्तु प्रकृतिकोमलाः — अत्रालङ्कारः कः?

(A) अप्रस्तुतप्रशंसा

(B) काव्यलिङ्गम्

(C) उत्प्रेक्षा

(D) व्यतिरेकः

**70.** चम्पूकाव्यं भवति

(A) गद्यमयम्

(B) पद्यमयम्

(C) गद्यपद्योभयात्मकम्

(D) गद्यपद्यानुभयात्मकम्

**71.** 'कुन्ताः प्रविशन्ति' इत्यत्र का लक्षणा?
(A) उपादानलक्षणा
(B) गौणलक्षणा
(C) सारोपा लक्षणा
(D) साध्यवसाना लक्षणा

**72.** 'वाक्यं स्याद्योग्यताऽऽकांक्षाऽऽसत्तियुक्तः पदोच्चयः — इति वाक्यपरिभाषा कुतः उद्धृताऽस्ति?
(A) काव्यप्रकाशात्
(B) साहित्यदर्पणात्
(C) काव्यादर्शात्
(D) दशरूपकात्

**73.** 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' - इयं सूक्तिः ________ नाटके विद्यते।
(A) मालविकाग्निमित्रे
(B) अभिज्ञानशाकुन्तले
(C) मालतीमाधवे
(D) उत्तररामचरिते

**74.** रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं ________।
(A) रतिः
(B) शोकः
(C) जुगुप्सा
(D) भयम्

**75.** चण्डीशतकम् कस्य रचना?
(A) अमरूकस्य
(B) मयूरभट्टस्य
(C) जयदेवस्य
(D) बाणभट्टस्य

**76.** 'मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी' — इति नैषधीयचरिते कस्येयं युक्तिः?
(A) हंसस्य
(B) कलेः
(C) नलस्य
(D) अग्नेः

**77.** ''क्रियासु युक्तैर्नृप चारचक्षुषः'' इत्यत्र के ''चारचक्षुषः''?
(A) शाक्ताः
(B) वैष्णवाः
(C) शैवाः
(D) प्रभवः

**78.** अन्विताभिधानवादी आचार्यः कः?
(A) वाचस्पतिमिश्रः
(B) पार्थसारथिमिश्रः
(C) प्रभाकरः
(D) कुमारिलः

**79.** उपमानोपमेययोः अभेदः —
(A) उपमा
(B) उत्प्रेक्षा
(C) रूपकम्
(D) निदर्शना

**80.** कुन्तकस्य उपाधिरस्ति
(A) कोविदः
(B) कविराजः
(C) राजानकः
(D) कविपुङ्गवः

**81.** काव्यघटनानुकूलशब्दार्थोपस्थितिः

(A) प्रतिभा

(B) निपुणता

(C) अभ्यासः

(D) शिक्षा

**82.** 'उपेन्द्रवज्रा प्रथमे लघौ सा' इत्यत्र 'प्रथमे' इति का विभक्तिः?

(A) अधिकरणे सप्तमी

(B) भावे सप्तमी

(C) निर्धारणे सप्तमी

(D) कर्मणि सप्तमी

**83.** ''ज्ञेयं वसन्ततिलकं तभजा जगौ गः'' इत्यस्य शुद्धमनुवादवाक्यं किम्?

(A) वसन्ततिलकः तभजा जगौ गः ज्ञातव्यः।

(B) वसन्ततिलकं तभजं जगौ गं ज्ञातव्यम्।

(C) वसन्ततिलकं तभजान् जगौ गं जानीयात्।

(D) वसन्ततिलकेन तभजैः जगाभ्यां गेन जानीयात्।

**84.** ''भर्तृस्नेहात् सा हि दग्धाप्यदग्धा'' इत्यत्र दग्धाप्यदग्धेत्यत्र वचने विरोधो नास्ति यतः —

(A) वासवदत्ता दग्धेति श्रूयते, किन्तु वस्तुतः सा जीविता।

(B) दग्धेत्यस्य लक्ष्यार्थः कश्चित् स्वीकर्तव्यः।

(C) अदग्धेत्यस्य लक्ष्यार्थः कश्चित् स्वीकार्यः।

(D) उभयोरेव पदयोः लक्ष्यार्थस्वीकारः करणीयः

**85.** 'श्रुतिविषयगुणा या स्थिता व्याव्य विशम्' इत्यत्र श्रुतिर्नाम

(A) वेदः

(B) आकाशम्

(C) श्रवणेन्द्रियम्

(D) श्रवणक्रिया

**86.** 'धनिनोऽपि निरुन्मादाः' इत्यादिनि विशेषोक्तिदृष्टान्ते उपमानोपमेयत्वं कुत्रास्ति?

(A) सोन्मादानां तथा निरुन्मादानां मध्ये

(B) धनिनां तथा निरुन्मादानां मध्ये

(C) धनिनां तथा सोन्मादानां मध्ये

(D) अधनिनां तथा सोन्मादनिरुन्मादानां मध्ये

**87.** 'या हविर्या च होत्री' इत्यत्र होत्री नाम

(A) यजमानपत्नी

(B) यजमाना रमणी

(C) यजमानरूपं शरीरम्

(D) आह्वानकारिणी

**88.** 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती' इत्यत्र 'अनलङ्कृती' इत्यस्यार्थः कः?

(A) अविद्यमाने अलङ्कृती

(B) अविद्यमाने अलङ्कृती ययोः तौ

(C) अविद्यमाना अलङ्कृतिः ययोः तौ

(D) अनलं कृतिः ययोः तौ

**89.** 'सुखदुःखसमुद्भूति नानारसनिरन्तरम्' — इत्यत्र नाटकलक्षणान्तर्गतवाक्ये 'सुखदुःखसमुद्भूति' इत्यत्र कः समासः?

(A) द्वन्द्वगर्भतत्पुरुषः

(B) द्वन्द्वगर्भाव्ययीभावः

(C) द्वन्द्वगर्भबहुव्रीहिः

(D) समाहारद्वन्द्वः

**90.** अर्थशास्त्रे कति अधिकरणानि सन्ति?

(A) चतुर्दश

(B) पञ्चदश

(C) षोडश

(D) द्वादश

[ Please Turn Over ]

**91.** महाभारते का रीतिः समादृता वर्तते?
(A) वैदर्भी
(B) गौडी
(C) पाञ्चाली
(D) अर्ध-मागधी

**92.** मनुमते उपनयनसंस्कारे ब्राह्मणस्य राजदण्डः कः?
(A) मस्तकान्तकः
(B) नासिकान्तकः
(C) मुखान्तकः
(D) केशान्तकः

**93.** मनुमते व्यूहः कतिविधः?
(A) चतुर्विधः
(B) त्रिविधः
(C) षड्विधः
(D) द्विविधः

**94.** 'क्षीरध्वजः' इति कस्य नामान्तरम् अस्ति?
(A) वशिष्ठस्य
(B) दशरथस्य
(C) जनकस्य
(D) भरतस्य

**95.** 'देवदत्तशङ्खः' कस्य आसीत्?
(A) श्रीकृष्णस्य
(B) भीमस्य
(C) अर्जुनस्य
(D) देवदत्तस्य

**96.** ब्राह्मीलिप्यां स्वराः कति भवन्ति?
(A) पञ्च
(B) सप्त
(C) दश
(D) नव

**97.** ब्राह्मीलिपेः 'क' कारोऽस्ति
(A) +
(B) ÷
(C) ×
(D) <

**98.** हनुमतः अङ्गुलीयकप्रदानवृत्तान्तः रामायणस्य कस्मिन् काण्डे वर्त्तते?
(A) सुन्दरकाण्डे
(B) युद्धकाण्डे
(C) किष्किन्ध्याकाण्डे
(D) उत्तरकाण्डे

**99.** दशरथस्य पुत्रेष्टियज्ञे पुरोहित आसीत् —
(A) वसिष्ठः
(B) ऋष्यशृङ्गः
(C) भारद्वाजः
(D) विश्वामित्रः

**100.** कस्य वेदस्य उपवेदो भवति अर्थशास्त्रम्?
(A) ऋग्वेदस्य
(B) यजुर्वेदस्य
(C) सामवेदस्य
(D) अथर्ववेदस्य

